अगस्त्यकोपेन तथैव शप्तौ
योद्धुं ह्यशक्तौ च सुमालिसंज्ञम् ।
पौलस्त्य मातामहमेत्य चावां
"पुत्रो भवावस्त्वि"ति चोचतुस्तौ ॥ 12

स्थित्वा चिरं नागतले च तेन
"मन्मातुलौ तावि"ति रावणेन ।
स्तुतौ जगन्नाशकरौ मरुद्वत्
तौ भ्रातरौ संभ्रमतः सवेगम् ॥ 13

त्यक्त्वा सुतौ कुंभसुतस्य शापं
स्मृत्वा ज्वलद्वह्नि समानकोपा ।
सा राक्षसी कानन मेतदाप
ज्वालापरीताग्नि वृतं समन्त त् ॥ 14

सा घोरकृत्या सहितं समृद्धया
तत्काननं नाशयति स्म पश्चात् ।
चित्ते नृणां लब्धपदो हि लोभः
विनाशयेत् रम्यगुणान् यथैव ॥ 15

दशाननाज्ञा वशमेत्य शैल-
समानसारा मम यज्ञहन्त्री ।
तदङ्गदेशस्थ जनान् सवंश्यान्
हत्वा भ्रमत्यत्र पयोदनील ! ॥ 16

तद्गाधिसूनोर्वचनं निशम्य
शङ्खाईहस्ताधृतशार्ङ्गधन्वा ।
सुगन्धपुष्पार्हशिरः प्रकम्प्य
"कुत्रेयमास्ते कथये"त्यपृच्छत् ॥ 17

शैलाभनागेन्द्रगतेस्तु वाक्यं
जितेन्द्रियो गाधिसुतो निशम्य ।
"अत्रास्ति सा चे" त्यभिधानतः प्राक्
तमाञ्जनाद्रिप्रतिमाऽऽविशत्सा ॥ 18

शैलाढ्ययन्नूपुरबद्धपाद-
घातोत्थगर्ते जलधिर्विवेश ।
बिलं गते भीतयमेऽनुयातैः
शैलैर्युता सा पुर आजगाम ॥ 19

"समस्तजन्तौ निहते मयैव
सुस्वाद्यमांसं मम नात्र लभ्यम् ।
इत्याशयाद्वा विधिना किमाप्ताः?
तत्कथ्यतामि"त्यवदत् पिशाची ॥ 20

ज्ञात्वापि भावं स मुनेर्दयालुः
मुमोच बाणान् न हि तद्वधार्थी ।
प्राणापहन्त्रीमपि घोरकृत्यां
रामः स्त्रियं तां हृदि मन्यते स्म ॥ 21

सनातनं धर्ममहं ब्रवीमि
क्रोधादहं नैव वदामि तस्याम् ।
नेदं दयाकृत्यमिमां जहि त्व-
मित्याह रामस्य पुरः स विप्रः ॥ 22

रामप्रयुक्ता निशिताश्च बाणाः
तद्वज्रतुल्यं हृदयं विभिद्य ।
गता बहिः, ज्ञानिभिरीरितार्थाः
यथा जडानामपयान्ति चित्तात् ॥ 23

व्यावृत्तवक्त्रा रुधिरैररण्य
आपूर्य तत्रैव पपात यत् सा ।
बभूव तद्रावणभाविनाश-
प्रबोधिकेतोः पतनेन तुल्यम् ॥ 24

निशाचरप्राणरसं पिपासुः
अटन् यमः प्राप तदत्र पूर्वम् ।
विरिञ्चितुल्यस्य मुनेर्विधेयः
रामो यदाद्यं रणमत्र चक्रे ॥ 25

''प्राप्ता वयं स्वीयपदं, न बाधा
स्यात्तेऽद्य दिव्यायुधजालमस्मै ।
रामाय देही''ति मुनिं प्रबोध्य
देवा ययुः पुष्पमवाकिरन्तः ॥ 26

# ४

## विश्वामित्रयागपटलः

(வேள்விப்படலம்)

गतेषु देवेष्वथ पुष्पवृष्ट्या
शीतं मरुप्रान्तमतीत्य विप्रः ।
दारिद्र्यहन्त्र्या शडयप्पवाचा
समायुधान् राजसुते ददौ सः ॥ 1

कृतानि सत्कर्मफलानि सद्भिः
जन्मान्तरे यान्ति यथा स्वयं तान् ।
तथा मुनौ यच्छति रामभद्रं
दिव्यायुधा हर्षयुतास्तमापुः ॥ 2

क्रोशद्वयं तेषु गतेषु तत्र
श्रुत्वा ध्वनिं, "जातमिदं नु कस्मात्?" ।
इत्थं मुनिं पृच्छति रामभद्रे
आरब्धवान् वक्तुमसौ तपस्वी ॥ 3

"तन्मानसाख्यात् सरसः प्रवृत्त-
नद्या सरय्वा सह गोमतीयम् ।
युता ध्वनत्येव"मुवाच विप्रः
ते कौशिकाख्यां प्रययुर्नदीं ताम् ॥ 4

"सुरस्तुता पुण्यनदी च केय"-
मित्थं तु रामेण मुनिः स पृष्टः ।
ऊचे, गुणी ब्रह्मसुतः कुशाख्यः
जज्ञे यतः पुत्रचतुष्टयं प्राक् ॥ 5

नदीत्वमाप्ता मम सोदरीति
श्रुत्वा कुमारावथ नातिदूरम् ।
गतौ, स रामो "विपिनं किमेत-
दि"तीव पप्रच्छ, मुनिर्बभाषे ॥ 6

भर्तैव दैवं त्विति मन्यमान-
नारीमनोवद्विपिनं विशुद्धम ।
वेदैस्तथान्यैर्मुनिभिस्त्ववेद्यः
पुरात्र विष्णु र्व्यदधात्तपांसि ॥ 7

नीलो हरिः श्लाघ्यगुणस्त्वदित्यां
त्रिकालवित्काश्यपसंज्ञके च ।
भूत्वा सुतोऽयं वटवृक्षगर्भ-
बीजं यथा वामनतामवाप ॥ 8

गत्वाबलिं तस्य वचो निशम्य
"स्वकांक्षितादप्यधिकप्रदातः! ।
त्वय्यर्थिनो भाग्ययुता न चान्ये"
इत्याह सोयं धृतकुब्जवेषः ॥ 9

तुष्टो बलिः, "वाञ्छितमत्र किं वे-"
त्यूचे, "दया चेत् त्रिपदप्रमाणाम् ।
प्रयच्छ भूमिं त्वि"ति वामनोक्तः
बलिस्तथेत्याह रुरोध शुक्रः ॥ 10

"मायामयं रूपमिदं महात्मन् !
न वामनोऽयं घननीलकायः ।
पुराण्डजालान् प्रसतो हरेस्तु
जानीहि रूपं त्विद"माह शुक्रः ॥ 11

"दानात् करे चोर्ध्वगते मदीये
पूर्णो घनाभो हरिरर्थिवेषः ।
अधः करो याचति चेत्तनो मे
भाग्यं किमन्यत् त्वमिदं न वेत्सि ॥ 12

"नासौ मृतो यं मृतमीरयामः
परन्तु हस्तैः किल याच्यते यैः ।
ते वै मृताः, तेषु च दानशीलात्
अन्ये किमासन् भुवि कीर्तिकायैः ?" ॥ 13

"ये निन्दकास्ते रिपवो न, किन्तु
ये वात्र दातॄन् किल वारयन्ति ।
ते शत्रवश्चात्मविघातकाश्च
निन्द्यं ततो ने"ति बलिर्जगाद ॥ 14

आक्रम्य लोकान् सकलान् पदाभ्यां
स्थानं ह्यलब्ध्वा बलिमस्तके सः ।
न्यधात्तृतीयं तुलसीधरोऽसौ
कुब्जो ह्ययं, हे धृतचापपाणे! ॥ 15

दुष्कर्मनिर्मूलन! राम! तस्मात्
इदं वनं प्रेक्ष्य च जन्महीनाः ।
भवन्ति सर्वे, श्रुतिगम्ययज्ञं
कर्तुं मम स्थानमितः किमन्यत्? ॥ 16

"यक्ष्येऽहमत्रे"ति वदन् मुनीन्द्रः
वनेन गत्वा मखवस्तुजालम् ।
सम्भृत्य रम्यौ मखरक्षणार्थं
नियोज्य तावारभताथ यज्ञम् ॥ 17

भूपालपुत्रौ मुनिना कृतं तं
यज्ञं सुराणां हितकामनार्थम् ।
अनन्यलभ्यं दिनषट्कसाध्य-
मरक्षतां पक्ष्म यथा हि नेत्रम् ॥ 18

तद्यज्ञसंरक्षक वीरसून्वोः
ज्येष्ठो मुनिं प्रेक्ष्य "गुणप्रधान! ।
प्राप्स्यन्ति घोरा भवदुक्तपूर्वाः
दैत्याः कदेदं स्थलमि" त्यपृच्छत् ॥ 19

मौनान्मुनिर्नोत्तरमाह, रामो
नत्वा मुनिं प्राप्य बहिर्ददर्श ।
घोराशनेर्भीषणमेघकल्पान्
निशाचरान् व्योम्नि विरावयुक्तान् ॥ 20

अग्निं वमच्छूलधरासुराणां
रक्तं च मांसं च मखाग्निकुण्डे ।
यथा पतेन्नैव तथाब्जनेत्रः
शरैर्वितानं कृतवानिहोर्ध्वम् ॥ 21

तपस्विनो वञ्चकदैत्यभीताः
"त्वामञ्जनश्याम! वयं प्रपन्नाः" ।
इत्यूचिरे जातविषाद्यथाब्जेः
भीत्याऽसुराः सोमशिखं प्रपन्नाः ॥ 22

तत्ताटकायाः किल वीरसून्वोः
मारीचमेकं विनिपात्य सिन्धौ ।
सुबाहुमन्यं निजघान दिव्यं
धनुस्तु रामस्य रमापतेस्तत् ॥ 23

सृष्ट्वा जगत् तज्जठरे वहन् त्व-
मत्राद्य यज्ञं मम यस्त्वरक्षः ।
पुण्यं मया तेन कृतं ह्यवैमि
न ते महत्कार्यमिदं विजाने ॥ 24

अथैवमुक्ते, कुसुमैः समृद्धे
वने तपःशीलमहर्षिमध्ये ।
गुणाकरं कौशिकमत्र रामः
"कार्यं मया किं वद"चेत्यपृच्छत् ॥ 25

इदं ह्यसाध्यन्त्विति यज्जगत्यां
तत्ते सुसाध्यं, महदस्ति कार्यम् ।
तदस्तु पश्चात्, मिथिलेशयज्ञं
गच्छेम द्रष्टुं त्वि"ति विप्र आह ॥ 26

## ७

## अहल्यापटलः

(அகலிகைப்படலம்)

रत्नागरूद्यत्पुलिनस्तनीं तां
विकासिपुष्पाढ्यसुमेखलाढ्याम् ।
शोणानदीरूपवधूं लताढ्य-
सुमध्यमां प्रापुरिमे त्रयोऽपि ॥ 1

नदीं गतेष्वेषु रविः परेद्युः
शैत्यप्रदानार्थमुपस्यमीषाम् ।
ततस्वबिम्बस्थिततापशान्त्यै
किं पश्चिमाब्धौ सरथो ममज्ज ॥ 2

जलेभवत्पद्मगृहे दलाढ्य-
कवाटवन्ध्ये भ्रमरा निशासु ।
उत्थाय पुष्पाढ्यवनं यदापुः
उवास तत्प्राप्य मुनिः सुताभ्याम् ॥ 3

पृष्टो "वनं किन्न्विति" राघवेण
दुष्कर्मनिर्मूलनयागकर्ता ।
"पुरा दितिः स्वीयसुतार्थमत्र
तपश्चकारे"ति जगाद वाक्यम् ॥ 4

एतादृशं स्थानमिदं, शिवाभ्यां
जातो हि गङ्गापवनैरधार्यः ।
स कार्तिकेयो ववृधे बलाढ्य-
स्त्वत्रेत्यवोचत् स च गाधिसूनुः ॥ 5

नीले हरेर्नाभितले यथैव
जायेत पद्मं विधिना सहैव ।
भित्वान्धकारं जगतां नियन्ता
रविस्तथाभूद् भुवि नीलसिन्धौ ॥ 6

त्रिमूर्ति तुल्यास्तत एव गत्वा
रुद्रोत्तमाङ्गोद्भवजाह्नवीं ताम् ।
कवेरजावत् कुसुमावकीर्णा
कूलङ्कषामापुरिमे मनोज्ञाम् ॥ 7

गङ्गाचरित्रं वद तात! सर्व-
मित्याह रामो, "मम नाथ! वत्स! ।
त्वद्वंशजन्मा सगरस्त्वयोध्या-
पतिर्बभूवे"ति मुनिर्बभाषे ॥ 8

ब्रह्माण्डमातुः पदयोश्च विष्णोः
भूत्वा विधिप्राह्यसुपादतीर्थम् ।
धृता हि रुद्रेण भगीरथेन
नीता भुवं प्राप वियन्नदीयम् ॥ 9

साश्चर्यमाकर्ण्य नतौ कुमारौ
गङ्गां समुत्तीर्य विशालसंज्ञम् ।
नतं च पृष्ट्वा कुशलं महीशं
विदेहदेशं प्रययुस्त्रयोऽपि ॥ 10

देशं प्रविष्टा मिथिलानगर्याः
प्राकारबाह्ये विरचय्य वासम् ।
शीलच्युतां योगिवधूमहल्यां
शिलामयीं शून्यतले त्वपश्यन् ॥ 11

शिलां गते राघवपादरेणौ
तेन स्वकं प्राप वपुस्त्वहल्या ।
ज्ञानी यथा मोहवियोगकाले
देहं निजं प्राप्य हरिं भजेत ॥ 12

गङ्गां भुवं नीतवतश्च राज्ञो
वंशस्थ! या तिष्ठति विद्युदाभा ।
दुष्टस्य चेन्द्रस्य सहस्रनेत्र-
दातुर्मुनेः सा गृहिणीत्यवोचत् ॥ 13

इत्थं मुनौ शंसति पद्मजायाः
पतिः, "विचित्रा खलु लोकयात्रा ।
किं कर्म चान्यद्वद लोकमातु-
रस्याः स्थितेः कारणमि" त्यपृच्छत् ॥ 14

इन्द्रोऽप्यहल्यानयनेन मार-
बाणैर्हतो जीवितुमैच्छदाऽसौ ।
विशुद्धिमद्गौतमवेषधारी
तं चापि विप्रोष्य विवेश शालाम् ॥ 15

अमोघशापस्य वरस्य दाता
स गौतमः प्राप गृहं, भयार्ता ।
तस्थौ सदा गर्ह्यतमा त्वहल्या
शक्रो भयाद्याति बिडालवेषः ॥ 16

स गौतमो वृत्तमिदं विदित्वा
क्रोधोज्ज्वलो बाणसमानवाचा ।
"त्वय्यङ्गनाचिह्नसहस्रयोगो
भूयादि"तीन्द्रं ह्यशपत् तथाऽऽसीत् ॥ 17

अवाप्य लज्जामथ निन्द्यतां च
यथौ सुरेशः, स्ववधूमहल्याम् ।
"वेश्यासमा त्वं भज वै शिलात्व-
मि"त्याह विप्रः, न्यपतत् तथा सा ॥ 18

"सन्तः सहन्तेऽज्ञकृतापराधान्
तद्ब्रूहि मार्गं त्वि"ति भार्ययोक्तः ।
"श्रीरामपादोद्गतरेणुभिस्त्वं
विमोक्ष्यसे" चेति मुनिर्बभाषे ॥ 19

अथेन्द्रहेतोर्विधिमुख्यदेवैः
स्तुतो मुनिः शान्तमनास्तदिन्द्रे ।
अपोह्य चिह्नानि सहस्रनेत्रा-
ण्यदादहल्याप्यभजत् शिलात्वम् ॥ 20

एवं पुरासीत् किल नीलमेघ!
नेतो जना निन्द्यगतिं प्रयान्ति ।
अहं पुरा ते करयोः प्रभाव-
मपश्यमद्यात्र पदप्रभावम् ॥ 21

तत्साह्यकृन्नीलवपुः स रामः
ध्यात्वा समस्तं किल कौशिकोक्तम् ।
"पत्युर्हितार्थं भज तं च मातः!
याहि त्वमि" त्याह ननाम तां च ॥ 22

तस्याञ्जनाभस्य च पादधूल्या
स्वरूपमाप्तां मनसा विशुद्धाम् ।
"इमां गृहाणे" त्यथ कौशिकोक्तः
स गौतमो ब्रह्मसमोऽग्रहीत्ताम् ॥ 23

रामो गुणी गौतममत्र नत्वा
समर्प्य तस्मै वरशीलयुक्ताम् ।
तां, गाधिपुत्रेण वनान्यतीत्य
ददर्श सालं मिथिलानगर्याः ॥ 24

## 10

## मिथिलादर्शनपटलः

(மிதிலைக்காட்சிப்படலம்)

मत्पुण्यतः श्रीः कमलं विहाय
मय्यत्र जातेति पुरीयमुक्त्वा ।
ध्वजाढ्यहस्तैः कमलाक्षरामं
"त्वमेहि शीघ्रं" त्विति साह्वयत् किम ! ॥ 1

सिक्त्वा शलाकाममृतेन यस्याः
मारोऽन्यरूपं न शशाक कर्तुम ।
तां जानकीं प्राप्य सरोजतुल्यां
रामादयस्तां मिथिलां प्रविष्टाः ॥ 2

मैथिलानगरवर्णनम् :—

विरक्तनारीनरसङ्घमुक्त-
सुवर्णभूषान्वितराजमार्गे ।
अगस्त्यपीताब्धिसमे च तारा-
युग्व्योमतुल्ये प्रययुस्त्रयोऽपि ॥ 3

मृदङ्गवीणारवगानयोगे
निरीक्ष्य नेत्रेण करौ सलीलम् ।
चित्तं तु नेत्रानुगतं विधाय
नृत्यद्वधूजुष्टसभामपश्यन् ॥ 4

सुवर्णमुक्तागरुरत्नपिञ्छ-
राशिं तु केदारतले विधातुम्
कृषीवलानामखिलार्थदातृ-
कावेर्यभिन्नापणमार्गमापुः ॥ 5

वीणाशलाकां स्वकरैः प्रचाल्य
बध्वा च तन्त्रीः हृदयं च पाणौ ।
कृत्वा, समन्दस्मितगायिकानां
गानं पिबन्तः प्रययुः स्वकर्णैः ॥ 6

पुष्पापचित्यां रतकीरवाचां
स्त्रीणां हि गत्या विजितांश्च हंसान् ।
दृष्ट्वा च यत्र भ्रमरा नदन्ति
वनं तथाभूतमिमे ह्यपश्यन् ॥ 7

सौगन्ध्य माधुर्य सुवर्णकान्ति-
मनोज्ञकाव्यादिमयीं तदेकाम् ।
कन्यागृहोर्ध्वस्थल पूर्वभागे
त्रयोऽपि दृष्ट्वा क्षणमप्यतिष्ठन् ॥ 8

सीतादेवीवर्णनम् :—

ब्रह्मादयः सुष्ठु विमृश्य सर्व-
वस्तूपमानं किल यां वदन्ति ।
सीतास्वरूपा यदि सा रमा स्यात्
किमन्यदस्या उपमानमस्ति ॥ 9

उमादिवन्द्यां प्रसमीक्ष्य सीतां
तत्पूर्णशोभानुभवाय मर्त्याः ।
वाञ्छन्ति नेत्रद्वयनिर्निमेषं
नेत्रद्वयादप्यधिकं च देवाः ॥ 10

तदन्यनारीं मधु भाषमाणां
सृजेति चोक्तोऽपि विधिर्न शक्तः ।
सुरैस्तु सिन्धुर्बहुधार्थितोऽपि
श्रेष्ठं सुधान्यन्न सृजेद्यथैव ॥ 11

इन्द्रादिदेवेप्सितमेनकाद्याः
शूलान्तनेत्रास्तु शरीरमस्याः ।
क्लिश्यन्ति दृष्ट्वा मुखरूपचन्द्रा-
स्तासां दिवाचन्द्रसमा बभूवुः ॥ 12

विहाय पद्मं भुवमेत्य सीता-
स्थित्यै चिरं कायविशोषपूर्वम् ।
धर्मेण वा विप्रवरैः सुरैर्वा
किं वा तपस्तप्तमहं न वेद्मि ॥ 13

प्रियाश्च सख्यः "हरिणीसमेति
मातेति पीयूषसमे"ति चोक्त्वा ।
तस्याः पुरस्ताद्विकिरन्ति पुष्पं
सीता बभौ पुष्पचये प्रयान्ती ॥ 14

सुमेखलानूपुररत्नहार-
समेतवल्लीसदृशाङ्गनासु ।
स्थितासु सीता शतकोटिविद्यु-
न्मध्ये च तासां महिषीव रेजे ॥ 15

कालं च शूलं च विजित्य दृष्ट्या
स्थितामिमां को भुवि वर्णनार्हः ।
तृणाश्मकुड्यान्यपि यां समीक्ष्य
द्रवीभवेयुश्च तथा बभौ सा ॥ 16

स्वप्रेक्षकान् याः किल तोषयन्ति
तासां वधूनामपि मैथिलीयम् ।
सुस्वाद्यपीयूषसमा यदि स्यात्
प्रभोर्हि रामस्य कथं भवेत्सा? ॥ 17

रम्याणि नानाभरणानि पूर्वं
रम्याङ्गनासङ्गमवाप्नुवन्ति ।
तान्यद्य सौन्दर्यकराणि सीता-
सङ्गात् स्वयं सुन्दरतामवापुः ॥ 18

सीतारामयोः प्रथमदर्शनम् :—

एवं स्थितायां जनकात्मजायां
तयोश्च नेत्रे हृदये मिथश्च ।
यथा मिलेतां च तथा स रामः
ददर्श सीतामथ सापि रामम् ॥ 19

तस्याः सुतीक्ष्णौ ननु दृष्टिशूलौ
अंसद्वये वीर्ययुते च तस्य ।
निपेततु, राघवरक्तनेत्रे
श्रीदेवतायाः कुचयोर्निमग्ने ॥ 20

बद्ध्वा मिथो दर्शनरूपरज्ज्वा
परस्पराकृष्टमनःसमेतौ ।
धन्वी स रामो वरजानकी तौ
अन्योन्यचित्ते क्रमशः प्रविष्टौ ॥ 21

गुणी स रामो तनुमध्यमा सा
प्राणैरभिन्नावपि भिन्नकायौ ।
विहाय दुग्धाम्बुधितल्पमेतौ
पुनर्मिलेतां यदि किन्नु वाच्यम् ? ॥ 22

सा दीर्घनेत्रैरिह निर्निमेष-
माल्क्ष्य चित्रप्रतिमेव तस्थौ ।
चिन्ताधृतिभ्यामनुगम्यमानो
रामोऽपि साकं मुनिना तिरोऽभूत् ॥ 23

सीताविरहवर्णनम् :—

अन्तर्हिते स्रग्विणि रामचन्द्रे
प्रमत्तचित्ताभिधवारणस्य ।
धैर्याङ्कुशे दूरगते तु तस्याः
लज्जापि नष्टेति किमत्र वाच्यम्? ॥ 24

स्वमध्यतुल्यं कृशदेहचित्त-
समन्वितायाः किल नेत्रमार्गात् ।
देहं समं प्राप्य स कामरोगः
व्याप्नोति तक्रं तु यथैव दुग्धे ॥ 25

स्वीयां दशां वक्तुमपारयन्ती
स्मृत्वैव तं मूकसमा रुदेत् सा ।
कामोऽपि तस्या हृदि बाणमेकं
प्रायुङ्क्त काष्ठं ज्वलिते यथाग्नौ ॥ 26

सुमेखलाधैर्यसुशङ्खमाला-
लावण्यविज्ञानमुखैर्विहीना ।
सीता विरेजे मथनात् सुराद्यैः
समस्तभाग्यै रहितो यथाब्धिः ॥ 27

सखीभिः सीतानयनम् :—

विस्रस्तभूषां च विनष्टलज्जां
विध्वस्तरूपां मदनस्य बाणैः ।
विद्धस्तनीं तप्तमृगीसमानां
कृच्छ्रेण सीतामनयन् हि सख्यः ॥ 28

मनोज्ञसीताकरपादतुल्य-
सुपल्लवैरास्तृतपुष्पतल्पे ।
शीतैश्च नीहारगणै रुपेते
सख्योऽत्र सीतां शयितामकार्षुः ॥ 29

सखीकृतशैत्योपचारः—

वने वसत्क्रूरनिषादबाण-
विध्वस्तकेकासदृशी च सीता ।
प्रसूनशाखेव च कामवह्नि-
तप्ताऽपतत् म्लानतमा हि तल्पे ॥ 30

विद्धानि पुष्पाण्यपि तच्छरीरे
तद्देहलिप्तानि सुचन्दनानि ।
शीर्णानि वह्नेः कणवत्स्वनङ्ग-
तापेन दग्धानि च पल्लवानि ॥ 31

तस्याश्च दासीजननीभगिन्यः
तस्माद्विषण्णा हृदि धैर्यहीनाः ।
ज्ञातुं ह्यशक्ताः किल रोगमस्याः
नीराजनं दोषधिया त्वकुर्वन् ॥ 32

पार्श्वे समुद्यद्व्यजनानिलेन
कामानले संततजृम्भमाणे ।
दग्धेषु मालाभरणादिकेषु
द्रवत्सुवर्णप्रतिमेव साऽभूत् ॥ 33

सीताविरहप्रलापः—

तमोवृतं पुष्पवनं किमेषः
किमस्य बाहू घनरत्नशैलौ ।
नेत्रे सरोजे पुरुहूतचाप-
युतो घनः किं भुवमाजगाम ॥ 34

मच्चित्तमाविश्य धृतिश्च लज्जां
विनाश्य मे प्राणमथाग्रहीद्यः ।
कामो न चायं किल तस्य पाणौ
स्थितं धनुर्नैक्षुमयं विभाति ॥ 35

नारीस्वभावस्थितरूपलज्जा-
ज्ञानानि मय्यद्य न सन्ति तस्मात् ।
पद्भ्यां सखेदं भुवि योऽगमत् स
किं नेत्रमार्गाऽऽगमनार्हचोरः ? ॥ 36

तन्नीलरत्नप्रतिमा शिखा वा!
हस्तौ नतौ चन्द्रसमं मुखं वा ।
अंसौ न वा, किन्तु स मन्दहासः
प्राणान् मदीयानहरच्च तस्य ॥ 37

न वा मनोहारिविशालवक्षः
न केवलं पद्मसमानपादौ ।
परन्तु यन्मत्तगजेन तुल्यो
ययावयं तद्धृदि मे सुलग्नम् ॥ 38

नेत्रे यतः पद्मसमे निमेष-
युते च तस्मान्न हि देव एषः ।
चापं करे वक्षसि यज्ञसूत्रं
वहन्नसौ राजकुमार एव ॥ 39

मदीयहृद्धैर्यसमाह्वययन्त्र-
पिनद्धकन्यावरणं विनाश्य ।
जगाम यस्तं पुनरेव नेत्रैः
म्रियेय दृष्ट्वा यदि तद्वरं मे ॥ 40

एवं तथान्यच्च समालपन्त्यां
"रामोऽत्र तस्थौ, स जगाम चे"ति ।
ब्रूयादियं प्रोत्थितकामवेगात्
बहूनि मत्वा हृदि चिन्तयेत सा ॥ 41

सूर्यास्तमनवर्णनम् :—

सीताशरीरस्थितकामवह्नि-
तापं स्वयं सोढुमशक्त एषः ।
सूर्योऽपि कम्पिस्वकरैरुपेतः
ममज्ज वेगात्किमु पश्चिमाब्धौ ॥ 42

पतङ्गशब्दोदितवाद्यघोषैः
पयोधिशब्दोदितनूपुरेण ।
नीलान्धकाराभिधकञ्चुकेन
युक्तेन भूतेन समा हि सन्ध्या ॥ 43

निशामुखप्रख्यभुजङ्ग ! हिंसां
करोषि, मारो मयि बाणमोक्ता ।
प्राणोऽपि चैको न हि मुक्तिरस्मात्
मुक्ते कथंचिन्मयि को विरोधः ? ॥ 44

रामो ययौ कोऽपि न तन्निरोद्धा
बाणप्रयोक्त्रा मदनेन किं त्वम् ।
प्रचोदितः क्रौञ्च ! मदीयपूर्व-
पापस्वरूपः किमिहागतोऽसि ॥ 45

पुनःसखीकृतशैत्योपचारः—

एवं हि मत्वा बहुचिन्तयन्त्यां
तत्तापसंवर्धकमाज्यदीपम् ।

अपोह्य चेटीकृतरत्नदीप-
कान्त्या निशां च रहस्समनाम् ॥ 46

चन्द्रोदयवर्णनम् —

तद्विष्णुना वै मथिताब्धिजात-
तुषाररत्नैः प्रसृते समन्तात् ।
सुधां वहत्काञ्चनपात्रतुल्यं
अब्धेस्तदाऽभूत् दिवि चन्द्रबिम्बम् ॥ 47

चन्द्राख्यशिल्पी हरिनाभिजात-
ब्रह्माण्डगेहं च पुराणभूतम् ।
ज्योत्स्नासुधालेपनमात्महस्तैः
कृत्वा नवं तद्विदधाति किन्नु? ॥ 48

चन्द्रनिन्दा—

तमोमयं व्याप्य जगत् प्रवृद्ध-
नीलाग्निसम्भूत सिताग्निरूप! ।
मायाविना त्वं विजितो हि नैल्ये
सिन्धुं तथा मामिह बाधसे त्वम् ॥ 49

पयोधिसम्भूतशशिन् न हि त्वं
क्रूरो नवा कोऽपि हतस्त्वयाऽत्र ।
श्रिया च लक्ष्म्या ह्यमृतेन साकं
जातस्य हिंसा मयि ते न युक्ता ॥ 50

।ः जानक्या विरहतापः—

आकाशसम्भूतनिशाकरस्य
कराढ्यलोहेन हतस्तनी सा ।
वह्निं गता हंसवधूसमाना
सा पुष्पतल्पे लुठति स्म सीता ॥ 51

चन्द्रस्य दीर्घैरथ रश्मिभिः सा
स्पृष्टा च दग्धा श्लथिता पपात ।
तदीयतल्पस्थसरोजराशेः
या वै दशाऽभूदभजद्दशां ताम् ॥ 52

पुनः पुनश्चन्दनलिप्तगात्रा
लब्ध्वाऽपि तालव्यजनोपचारम् ।
रम्यस्तनी सा बहुतापमाप
किमौषधं मन्मथरोगशान्त्यै ॥ 53

पुनश्चेटीकृतशैत्योपचारः—

सीताशरीरोत्थितकामवह्नि-
दग्धेषु पुष्पैरथ पल्लवैश्च ।
कृतेषु तल्पेषु तदा ह्यकार्षुः
सहस्रमेवं शयनानि चेट्यः ॥ 54

रामकथावर्णनम्ः—

हंसीव कन्यागृहपुष्पतल्पे
तस्थौ विषण्णा, तटिता समानम् ।
शरीरमस्या हि ददर्श योऽस्य
रामस्य गाथामथ वर्णयामः ॥ 55

रामादयस्ते जनकं समीक्ष्य
प्रत्युद्गतास्तेन च भोगपूर्णम् ।
दिविस्पृशं देवपुरीसमानं
सौधं हि नीता न्यवसन् त्रयोऽपि ॥ 56

श्रीरामपादाम्बुजयोगलब्ध-
स्वरूपवत्यास्तनयो मुनीन्द्रः ।
मूर्तीभवत्सर्वतपोमयोऽसौ
प्रापत् शतानन्दमुनिस्तदात्र ॥ 57

प्राप्तं शतानन्दमुनिं स रामो
ननाम, वैदेहपुरोहितोऽपि ।
विधाय रामाय तदाऽऽशिषोऽग्रे
समागतं कौशिकमाप सद्यः ॥ 58

तपस्विनं गाधिसुतं समीक्ष्य
"त्वया यदत्रागतमत्र तेन ।
भूम्याऽनया किन्तु तपश्च तप्तम्"-
इत्याह सूनुः किल गौतमस्य ॥ 59

निहत्य रामः किल ताटकां ता-
मापूर्य यज्ञं जननीमहल्याम् ।
विमोच्य मे शोकहरो मुनीन्द्र !
शृणु त्वमित्याह स गाधिसूनुः ॥ 60

नीलाब्धिनीलोत्पलनीलरत्न-
मेघादिकान्त्युज्ज्वलदेहवन्तम् ।
दृष्ट्वा शतानन्दमुनिस्तु राम-
कथामवोचन्ननु कौशिकस्य ॥ 61

इत्थं पुराऽऽसीदथ कौशिकेन
समः प्रसिद्धो न हि, तद्दयां च ।
लब्ध्वा ह्यसाध्यं युवयोः किमस्ती-
त्याहस्म तौ गौतमसूनुरेषः ॥ 62

एवं मुनौ शंसति गौतमस्य
सूनुं प्रणम्योत्थितवीरवर्यौ ।
तौ भ्रातरौ चाप्यनुगृह्य गेहं
ततः शतानन्दमुनिर्जगाम ॥ 63

स कौशिको लक्ष्मण इत्युभौ ता-
वगच्छतां स्वीयमनोज्ञशय्याम् ।
ऐकान्त्य-सीता-शशि-रात्रियुक्तो
नीलः स रामोऽप्यभवद्विनिद्रः । 64

**सीताविरहेण रामप्रलापः—**

रम्याङ्गनाकारसमेतविद्यु-
त्स्वरूपमेकं भुवि किन्तु दृष्टम् ।
न स्यादिदं चेति न वच्मि किन्तु
पश्यामि रूपं हृदि चक्षुषोश्च ॥ 65

सा निर्दया यद्यपि कामरोग-
निदानतद्वीक्षणवीक्षितोऽहम् ।
अस्यामहं प्रीतियुतश्च तस्मात्
सर्वत्र पश्यामि तदीयरूपम् ॥ 66

तत्स्वर्णकुम्भप्रतिमस्तनाभ्या-
मालिङ्गनं वक्षसि मे न चासीत् ।
रक्तोष्ठमन्दस्मितपूर्णमास्यं
द्रष्टुं कदा स्यात् पुनरेव कालः ॥ 67

मृत्योः स्त्रिया हन्त मया स्मृतायाः
क्रूरे च नेत्रे जघनं विशालम् ।
स्तनौ स्मितं चेति भवन्ति नाना
मां हन्तुमेतानि कुतो बहूनि ॥ 68

अथेक्षुधन्वा कमलानिमित्तं
प्रसूनबाणान्मयि चैव वृष्ट्वा ।
मां चेत्स कुर्यादिह वीर्यहीनं
क्व वा वसेद्वीर्यमिदं नु पश्चात् ? ॥ 69

हर्तुं जगत् प्रोत्थितदुग्धसिन्धु-
प्रवाहवद्दृशापूतकौमुदीयम् ।
मत्प्राणमाविश्य हिनस्ति तस्मात्
श्वेतं विषं चापि किमस्ति लोके! ॥ 70

न वा कुमार्गे मम चित्तमेति
तथापि तां वाञ्छति मानसं मे ।
ततो ध्रुवं सा किल भूपकन्या
प्रसिद्धमेतत् न हि मे वितर्कः ॥ 71

रामे तथा कामवशेन खिन्ने
विकासयन् पद्मवधूमुखानि ।
उदेति भास्वानुदयाद्रिरूप-
महेशफालाक्षिभवाग्नितुल्यः ॥ 72

विहाय दुग्धाम्बुधिनागतल्पं
वियोगदुःखाब्धितले शयानः ।
स राघवः सूर्यकरावमृष्टः
पारं निशाब्धेरगमद्विनिद्रः ॥ 73

कृच्छ्रेण नीत्वा रजनीं प्रबुद्धः
समाप्य दैनन्दिनकर्मजालम् ।
नत्वा मुनिं लक्ष्मणसंयुतोऽसौ
विवेश तां मैथिलयज्ञशालाम् ॥ 74

दृष्ट्वा कुमारौ जनको मुनीन्द्रं
प्रणम्य कौ ताविति पर्यपृच्छत् ।
द्रष्टुं मखं चापमिहागतौ ता-
विल्याह विप्रश्च तयोः प्रभावम् ॥ 75

## 11

## कुलप्रभावकथनपटलः
(குலமுறை கிளத்து படலம்)

मनुः पृथुश्चः—

न वेत्ति को वा रविवंशपूर्व-
पुत्रं मनुं, किंच भुवं स्वबाणैः ।
दुग्ध्वा क्षुधार्तान् सकलान् पृथुर्यो
ररक्ष राजा स च सूर्यवंश्यः ॥ 1

स्तुत्वा विधिं भोगिशयं रमेशं
स्वीकृत्य तद्रङ्गविमानयुक्तम् ।
इक्ष्वाकुराजो भुवमानयद्यो
तं ये न जानन्ति जडाः स्युरेते ॥ 2

ककुत्स्थः—

"हत्वाऽसुरान् तैर्हृतदेवलोकं
विमोच्य देही"ति सुरेशपृष्टः ।
चक्रे तथा तत्कुलभूः ककुत्स्थ-
आरुह्य शक्रं वृषभस्वरूपम् ॥ 3

शिबिः—

जन्तून् समान् आत्मसमान् अरक्ष-
न्नेतत्कुलीनास्त्विति यान् वदामः ।
स्वप्राणदानेन विहङ्गरक्षां
कुर्वन् शिबिश्चान्यतमो हि तेषु ॥ 4

भगीरथः—

सहस्रवक्त्रोऽपि यशांस्यमीषां
न शक्तुमीशो यदि, किं मयाऽत्र ।
प्रसूनयुग्रुद्रशिरःस्थगङ्गां
गामानयद्यः स च सूर्यवंश्यः ॥ 5

रघुः—

यश्चन्द्रजेता ननु रुद्रजेता
यो दुन्धुहन्ता बहुभिर्नृपैस्तैः ।
विख्यातवंशो रघुरेष जातः
शक्रं दिशोऽप्यष्ट जिगाय सोऽयम् ॥ 6

दशरथः, तत्पुत्रौ चः—

अजस्य सूनुं भुवि को न वेत्ति
तदस्य सून्वोरनयोर्महत्त्वम् ।
वक्तुं न शक्तश्चतुराननोऽपि
राजन् यथाशक्ति तदत्र वक्ष्ये ॥ 7

रामाङ्घ्रिधूल्यैव महर्षिपत्नी
भेजे निजं रूपमिदन्नु दृष्टम् ।
प्राणादपि प्रीतियुतोऽहमस्मिन्
एषा कथाऽस्येत्यवदन्मुनीन्द्रः ॥ 8

## 12

## धनुर्भङ्गपटलः

(காமுகப்படலம்)

"वक्ष्यामि किं ते धनुषाऽत्र विप्र!
भग्नं मनो मे, यदि सज्यमेतत् ।
कुर्यात्स रामो मम शोकहानिः
सीताऽपि धन्ये"ति नृपो जगाद ॥ 1

"आनीयतां शैलसमं धनुस्त-
दद्ये"ति भृत्यानवदन्महीशः ।
चत्वार एवात्र नता महीशं
जवेन जग्मुर्धनुरस्ति यत्र ॥ 2

ते पर्वतांसा गजतुल्यकायाः
षष्टिः सहस्राण्यथ वीरवर्याः ।
स्तम्भान् दृढं मध्यतलेषु बद्ध्वा
ते दण्डमूलाद्धनुरानयन्ति ॥ 3

दृष्ट्वा नानापौरवचनानि—

"सशङ्खचक्रो हरिरेव सज्यं
धनुर्न कुर्याद्यदि कोऽत्र चान्यः ।
आगत्य विष्णुर्यदि भञ्जयेत्तत्
सीताविवाहो ध्रुवमि"त्यवोचन् ॥ 4

"हिमाद्रिमादाय कृतं किमेतत्
किमादिशेषः किमु मन्दराद्रिः ।
किमिन्द्रचापः पतितः पृथिव्याम्"
इतीव पौरा बहुधा वदन्ति ॥ 5

"राजाऽऽह, कस्माद्धनुरानये"ति
"न सन्ति मूढा जनकेन तुल्याः" ।
"फलेदपीदं किल पूर्वपुण्यात्"
"किं सा धनुर्दृष्टवती" त्यवोचन् ॥ 6

"तद्बाणलक्ष्यं भुवने किमस्ति ?
"कन्यार्थमेतन्निहितं नु राज्ञा" ।
"चक्री स रामः किमु भञ्जयेत्तत् ?"
"तत्पापकर्मे"ति वदन्ति नाना ॥ 7

शतानन्देन सीताधनुषोश्चरित्रकथनम् :—

रामस्य कान्तिं गजवत्स्थितस्य
चापं च दुर्धर्षमवेक्ष्य, राज्ञः ।
सीताकृते जातमनोव्यथां तां
ज्ञात्वा शतानन्दमुनिर्जगाद ॥ 8

"धनुःप्रभावो न मयाऽत्र वाच्यः
त्वं वेत्सि नान्योऽस्ति महेशतुल्य ! ।
रथाङ्गपृष्ठा जनकस्य पुत्री
या वृत्तमस्याः शृणु कौशिक त्वम्" ॥ 9

कथं वदेयं गुणजालमस्याः
गुणाः स्वयं जीवितुमापुरेनाम् ।
सौन्दर्यमेनामभजत् सुतप्त्वा
लावण्यहीनास्त्वनयाऽन्यनार्यः ॥ 10

एतावता केऽपि न चापमापुः
पलाय्य लीना न नृपा निवृत्ताः ।
न स्याद्विवाहो ध्रुवमित्यमंसि
स नामयेच्चेद्भविता विवाहः ॥ 11

होमाज्यसिक्तस्थलजातवह्नि-
समो हि रामोऽप्युदतिष्ठदत्र ।
"नष्टं धनुश्चेति सुरा विनेदु-
राशींष्यकुर्वन् मुनयोऽपि रामे ॥ 12

महर्षिणा शुद्धतपोविधात्रा
रामो नियुक्तो न धनुर्बभञ्ज ।
कामस्तु पूर्वं हृदये वधूनां
बभञ्ज बाणैर्धनुषां सहस्रम् ॥ 13

दृष्ट्वा पौरस्त्रीवचनानिः—

"संयोज्य हस्तौ गजतुल्यरामो
नारोपयेच्चेद्धनुरेष बाणैः ।
सीता सुकेशी च वयं च सर्वाः
पतेम वह्ना"विति काश्चिदाहुः ॥ 14

"श्रद्धा विवाहे नृपतेर्यदि स्यात्
'गृहाण सीतामि'ति चोक्तवान् स्यात् ।
कुतो न्यधात् शैवधनुस्तदग्रे
मूढो नृपोऽसा"विति चाहुरन्याः ॥ 15

"लज्जा न सर्वज्ञमुनेरपी"ति
"भूपादपि क्रूरजनो नचे"ति ।
ऊचुः, "स रामो न हि भञ्जयेच्चेत्
पीनस्तनी सा भविता ह्यभाग्या" ॥ 16

वधूभिरित्थं कथिते, महर्षि-
सङ्घेषु देवेष्वथ हृष्टवत्सु ।
व्रीडायुतान् वारणमेरुमुख्यान्
कुर्वन् स्वगत्या प्रययौ स रामः ॥ 17

निमेषशून्याः सभिकाः पदाभ्यां
चापावमर्दं शरबन्धनं च ।
वेगाददृष्ट्वा, धनुषः करेण
स्पर्शं त्वपश्यन् ध्वनिमप्यशृण्वन् ॥ 18

मं दृष्ट्वा पुरजनवाक्यम्ः—

"स राजपुत्रो", "हरिरब्जनेत्रः"
"स नीलमेघः", "स तु पुष्पकान्तिः" ।
"क्षीराब्धिवासी हरिरेष", "मर्त्यो
न चे"ति पौरा बहुधाऽब्रुवंस्ते ॥ 19

सीतापि रामं स च जानकीं तां
द्रष्टुं सहस्रं नयनानि नालम् ।
"तथाऽनुजं पश्यत", "योगिनं ता-
वानीतवन्तं नमते" त्यवोचन् ॥ 20

जानक्याः स्फटिकगृहप्रवेशः—

अन्त्यां दशां प्राप्य विसृज्य तल्पं
सखीवृता पद्मतटाकतीरे ।
सा स्फाटिके सद्मनि चन्द्रकान्त-
जलार्द्रपद्मं शयनं विवेश ॥ 21

सीताविरहप्रलापः—

सज्जे धनुष्यात्तकरौ तदीयौ
सबाणतूणीरयुतौ तथांसौ ।
पुष्पाढ्यवक्षश्च यदीह दृष्टं
स्याज्जीवितं मे पुनरेव दृष्टम् ॥ 22

आकाशचन्द्रेण सपुष्पकेशैः
चापेन युक्तो जलदः स्वदृग्भ्याम् ।
पीत्वा मम प्राणजलं मदीय-
चित्ते वसत्यद्य सदा वसेच्च ॥ 23

कामः कठोरः कठिनान् स्वबाणान्
मयि प्रयुङ्क्ते, कलुषां ततो माम् ।
"मा ते भयं स्यादि" ति वाक्यमुक्त्वा
ह्यरक्षतस्तस्य कुतो हि पुंस्त्वम् ॥ 24

"भो भोः स्तनौ! किन्तु फलं प्रवृद्धया
दुर्भेदचापं धृतवान् दयालुः ।
चन्द्राननो यो भुवि तस्य वक्षः-
संश्लेषसौख्याय तपो विधत्तम्" ॥ 25

इषूनमुञ्चन्मदनो हृदिस्थः
तच्चित्तरोगोत्थकुचद्वये मे ।
विषेण सिञ्चन्नपि नैष पूर्व-
चन्द्रः कलङ्को हि न तस्य मध्ये ॥ 26

कामप्रयुक्तास्त्रविषावमग्न-
देहाददग्धा बहिरागता मे ।
प्राणास्तु तद्राघवपादमाप्य
गता निवृत्ताः कथमत्र चित्त! ॥ 27

विद्युद्युतो मेघ इवावतीर्य
गां प्राप्य यातो धृतयज्ञसूत्रः ।
न वेद्मि कोऽसाविति तं हृदिस्थं
अग्रे स्थितं तं च कुतो न जाने ॥ 28

भूत्वा पयोऽब्धावमृतं च लब्ध्वा
त्यजेद्यथा हेमघटेन मूढः ।
रामाङ्गसंश्लेषसुखं तथैव
विहाय लब्धं मम किं प्रलापैः ॥ 29

नीलमालाख्यचेट्याः सीतान्तिकागमनम्:—

वियद्धनुस्तुल्यविचित्ररूप-
समुज्ज्वलत्कुण्डलहारयुक्ता ।
चेटी गलत्कुन्तलवस्त्रयुक्ता
सा नीलमाला द्रुतमाजगाम ॥ 30

चेट्या धनुर्भङ्गवृत्तान्तकथनम्:—

"स सालवृक्षोन्नतपाणियुक्तो
ह्यसौ हरिस्त्यक्तभुजङ्गतल्पः" ।
इत्येवमूह्यो मुनिनाऽनुजेन
साकं पुरीं प्राप स रामनामा ॥ 31

धनुस्त्ववष्टभ्य पदा क्षणेन
जग्राह तच्छिक्षितयन्त्रतुल्यम् ।
प्रसूनवर्षे सति भग्नमेतत्
पपात, सा राजसभा चचाल ॥ 32

॥: सन्देहनिवृत्तिः—

"स मेघरूपो मुनिना जगाम
स पद्मनेत्रस्त्व"ति चेटिवाक्यैः ।
सीता, "प्रियोऽसावि"ति निश्चिकाय
भग्नाथ काञ्ची ववृधे नितम्बम् ॥ 33

हर्षात्पुनः पुष्टसुमध्यमा सा
प्रवृद्धवक्षोजयुता प्रहृष्टा ।
"तत्कारणैरेष स एव नो चेत्
ध्रुवं मृता स्या"मिति मन्यते स्म ॥ 34

कवाक्यम्:—

स्वामिन्! त्वया प्राप्तवतोऽस्य सद्यः
कार्यो विवाहः किमथो नरेन्द्रम् ।
ससैन्यमानाय्य ततः किमस्य
कार्यो वद त्वं त्विति भूप आह ॥ 35

नकेन दशरथाय दूतप्रेषणम्:—

अथैवमुक्त जनकेन, योगी
"शीघ्रं नृपस्यानयनं वरं स्यात्" ।
इत्याह, वृत्तं सकलं च दूतै-
र्न्यवेदयन्मैथिल एष राज्ञे ॥ 36

# 13

## दशरथप्रस्थानपटलः

(எழுச்சிப்படலம்)

### जनकदूतागमनम् :—

भेरीरवाढ्यां गमिता अयोध्यां
सद्ध नृपं द्रष्टुमपारयन्तः ।
अनेकभूपालकिरीटशोभि-
पुरीमुखे तस्थुरिमे हि दूताः ॥ 1

### सन्देशपठनम् :—

दूता इमे, "ख्यातगुणिन् नरेन्द्र !
गृहाण पत्रं त्विदमि"त्ययच्छन् ।
जग्राह तद्राजसभास्थविद्वान्
पपाठ राज्ञश्च निदेशवश्यः ॥ 2

### धनुर्भङ्गश्रवणम् :—

"पुरा कपर्दी धनुषैव येन
जिगाय लोकानथ दक्षयज्ञे ।
तच्चापभङ्गध्वनिरेव पूर्वं
मया श्रुतः किन्वि"ति भूप आह ॥ 3

[याऽऽदेशः—

"यत्रास्ति रामो रघुवंशराज-
पुण्यैकजातो मदनेन तुल्यः ।
सैन्यं नृपास्तां मिथिलां प्रयातु
तद्घुष्यतामि"त्यवदन्नृपेन्द्रः ॥ 4

[रथसेनाप्रस्थानम्:—

नृपस्य गम्भीरगतेस्तु सेना
व्याप्ताऽभवत्सर्वत एव लोके ।
वातेन सिन्धुः सकलं विनाश्य
व्याप्नोति यद्वत्प्रलये प्रवृद्धः ॥ 5

रघूद्वहः सर्वजनार्तिहन्ता
नैव प्रतस्थे, प्रथमं ततोऽपि ।
उत्थाय मध्ये प्रसृतस्तदीय-
सेनाप्रभागो मिथिलां जगाम ॥ 6

विप्राः—

गजैर्वधूभिश्च समं प्रयातुं
भीता युताश्छत्रकमण्डलुभ्याम्
जपादि कर्माह्निकरानथोच्चैः
कृत्वा पदाग्रैः प्रयुयुर्द्विजेन्द्राः ॥ 7

वसिष्ठः—

बहुश्रुतैः यागपरैश्च विप्रैः
समेत्य मुक्ताशिबिकां प्रविष्टः ।
अरुन्धतीनायक एष यातो
हंसं समारुह्य यथा विरिञ्चिः ॥ 8

भरतशत्रुघ्नौः—

गजैस्तुरङ्गैः परितो वृतौ तौ
शैलं यथा सिन्धुरिमौ कुमारौ ।
तथाऽनुयातौ तमृषिं वसिष्ठं
तौ भ्रातरौ गाधिसुतं यथैव ॥ 9

दशरथ :—

तन्नित्यकर्माणि विधाय विष्णुं
प्रणम्य गोभूमिसुवर्णमुख्यान् ।
दत्वा द्विजेभ्यो मुदितः किरीटी
शुभे मुहूर्ते नृपतिः प्रतस्थे ॥ 10

चन्द्रशैलप्राप्तिः—

क्रोशद्वयं प्राप्य रघुप्रवीरः
तं चन्द्रशैलस्य तटं विवेश ।
नारीसुकेशस्तनसक्तपुष्प-
सुगन्धिसैन्यं न्यवसत्तटेऽस्मिन् ॥ 11

# 14

## चन्द्रशैलदर्शनपटलः

(வரைக்காட்சிப்படலம்)

ाणां श्रमपरिहारः—

अध्वश्रमात् सुप्तवधूमुखाब्जान्
पद्मभ्रमेण भ्रमरा भ्रमन्ति ।
समीक्ष्य सख्यः प्रतिबिम्बमासां
भ्रान्ता बभूवुः स्फटिकस्थलेषु ॥ 1

श्वाः—

भूम्यां लुठन्तस्तुरगाः स्वदेह-
धूलिं च निर्धूय भवन्ति पूताः ।
मैत्रीं खलैराप्य ततोऽत्र दोषान्
ज्ञात्वा यथा तान् विसृजन्ति सन्तः ॥ 2

द्यः—

नद्यः प्रवाहे रहितास्तु वारि
यच्छन्ति भूयः खननेन किञ्चित् ।
दानैकशीलाः स्थितमल्पमर्थं
सप्रेम यच्छन्ति यथाऽर्थिवर्गे ॥ 3

दीपारोपणम्—

मन्दारमालोज्वलितस्य राज्ञः
सेनासमुद्रे बहुघोषयुक्ते ।
आरोपिता दीपगणा विभान्ति
पयोधिसम्भूतसरोजतुल्याः ॥ 13

चन्द्रोदयः—

मुक्तासमूहे सितसैकतस्थे
भूत्वा चरच्छ्वेतसुशङ्खतुल्यः ।
उत्थाय सिन्धोरुडुभिः समेत्य
विभाति चन्द्रो गगने विशुद्धः ॥ 14

निशानयनम्—

भुक्त्वा समक्षं रतिशास्त्रसारं
कृत्वा वधूवाञ्छितमेव सर्वम् ।
नाट्यं च सङ्गीतयुतं समीक्ष्य
निन्युर्निशां सैन्यगता नरास्ते ॥ 15

## 15

## पुष्पापचयपटलः

(பூங்கொய் படலம்)

सूर्योदयः—

तमो हिरण्यं ह्युडुरूपदंष्ट्रा-
युतं निहन्तुं किरणाख्यहस्तैः ।
युतो रविः पश्चिमशैलरूप-
स्तम्भादुदेति स्म यथा नृसिंहः ॥ 1

न्यस्य दशरथस्य शोणानदीप्राप्तिः—

रथाधिरूढः कृतनित्यकर्मा
जगाम राजा, नृपवाहिनी च ।
शोणानदीं प्राप सरोजयुक्तां
वनैः समन्तादुपशोभितां च ॥ 2

ामुपवने वासः—

तदा रवावम्बरमध्यमाप्ते
वधूयुता राजसुतास्तदन्ये ।
पुष्पापचित्या सलिले विहार-
योग्यं नदीजुष्टवनं प्रयाताः ॥ 3

त्रीणां मधुरालापाः—

सुभूषितानां मधुरस्वनानां
सुकुन्तलानां वचनं वधूनाम् ।
श्रुत्वा न कूजन्ति पिका ह्रियेव
किं रम्यवाचां पुरतोऽन्यवाक्यैः ॥ 4

स्त्रीणां पुष्पापचयः—

सुधास्रवन्नेत्रयुताङ्गनाभिः
स्पृष्टास्तु शाखाः स्वयमेव नम्राः ।
वर्षन्ति चेत्पादतलेषु पुष्पं
को वा विशेषो नमने नराणाम् ॥ 5

रमासमस्त्रीकरपद्मयोगात्
सिंहातिशाय्युत्तमवीर्यभाजाम् ।
नृणां नमेतां यदि शैलहस्तौ
कः पुष्पशाखानमने विशेषः ॥ 6

भ्रमरभ्रमणम्—

नदीतटाकेषु न भूतपूर्वं
नारीलतोद्यन्मुखरूपपद्मम् ।
भृङ्गाश्चरन्तो न हि तत् त्यजन्ति
दृष्ट्वा नवं वस्तु परित्यजेत् कः ॥ 7

एका युवती—

युवा तरौ प्रेक्ष्य तु "नारिकेल
फलान्यहो स्त्रीकुचवद् विभान्ति" ।
इत्याह, "कां वा हृदि मन्यतेऽसौ"
इतीरयित्वा रुदति स्म भार्या ॥ 8

अपरा युवती—

पत्न्याः पुरः स्त्र्यन्तरनाम मोहात्
जगाद भर्ता, कुपिता नताङ्गी ।
सा पुष्पमाघ्रातवती रुदन्ती
दग्धं प्रसूनं श्वसनैस्तदीयैः ॥ 9

सौन्दर्यम्—

"महर्षयो योगरता मनोज-
बाणैर्हता न स्युरितीयमुक्तिः" ।
वृथैव, पुष्पापचयोद्यतानां
स्त्रीणां भ्रुवो हन्तुमिमान् समर्थाः ॥ 10

को युवा—

देवैरलेख्याद्भुतमूर्तिमत्याः
समीक्ष्य शोभां हृतचित्तदृष्टिः ।
आरुह्य शाखां मुकुलानि पुष्प-
बुद्ध्याऽपचित्य प्रददाति कश्चित् ॥ 11

जलक्रीडागमनम्—

सुच्छायया शीततमे वनेऽस्मिन्
पुष्पापचित्यां सकला विरक्ताः ।
शुद्धे जले श्वेततरङ्गपूर्णे
विहर्तुकामाः प्रययुर्ह्रदादीन् ॥ 12

## 16

## जलक्रीडापटलः

(புனல்விளையாட்டுப்படலம்)

जलाशयगमनम्—

स्वकीयशोभाजितदेववृन्दाः
नार्यो नरा भृङ्गयुतादरण्यात् ।
उत्थाय गच्छन्ति नदीह्रदादीन्
यथा गजा यान्ति वने सभार्याः ॥ 1

सलिलमज्जनदृश्यम्—

दुर्वाससः शापत इन्द्रभाग्यं
पुरा पयोधावमराङ्गनाभिः ।
मग्नं यदासीत् सममास तेन
जलाशये मग्नवतां समूहः ॥ 2

एका—

काचिन्मनोज्ञा धृतपुष्पकेशा
दृष्ट्वा स्वबिम्बं सलिले सखीं ताम् ।
मत्वा भ्रमात्स्वेन समं हसन्तीं
तस्यै ददौ सा स्तनलग्नहारम् ॥ 3

अपरा—

सुमेखला मध्यतलात् च्युतास्ताः
जलावगाहे पतिता ह्रदेषु ।
पदावगृह्णन्, "किमु पादलग्न-
सर्पोऽय"मित्थं भयमाप काचित् ॥ 4

मत्स्याः—

मत्स्याः सकस्तूरिमधुप्रवाह-
गन्धं जले स्त्रीवपुषो वहन्ति ।
सङ्गात् सतां ज्ञानयुता नराः स्यु-
रित्यत्र किं वाऽन्यनिदर्शनेन ॥ 5

ाशयः—

स्नाताङ्गनादेहसुकुङ्कुमेन
नृपाङ्गसम्बद्धसुचन्दनेन ।
युक्तं ह्रदस्थं सलिलं च नील-
घनाढ्यरक्ताम्बरतुल्यमासीत् ॥ 6

ूर्यास्तमयः—

कुरङ्गनेत्राः पुरुषैः समेताः
यच्चक्रुरेताः सलिलावगाहम्
समीक्ष्य तत्कर्तुमनाः स्वयं च
किं पश्चिमाब्धिं तपनो विवेश ? ॥ 7

चन्द्रोदयः—

पूर्वं नृपः क्षीणबलो जितोऽपि
यथा पुनर्योद्धुमुपैति मोहात् ।
जितस्तु नारीवदनैः प्रयातः
शशी पुनर्योद्धुमुपैति तद्वत् ॥ 8

## 17

### मद्यपानपटलः

(உண்டாடுபடலம்)

चन्द्रिका—

सुराप्रवाहो धवलः किमेष ?
किं मूर्तिमद्दानरसप्रवाहः ? ।
अन्तःस्थकामस्रवणं बहि-
र्वेत्यूह्याऽभवद्व्यापृतकौमुदीयम् ॥ 1

नानागृहाणि—

छायातलं मौक्तिकमण्डपस्य
चरत्पयोदावृतकाननं च ।
स्थलं विशुद्धस्फटिकैर्निबद्धं
प्रसूनगेहं विविशू रमण्यः ॥ 2

सुरया कामवर्धनम्—

पुष्पागरूद्यत्कचभारयुक्त-
स्त्रीभिः सुपीता मदिराऽथ तासु ।
अन्तःस्थ कामाग्निमवर्धयत्सा
हुतं घृतं वर्धयते यथाऽग्निम ॥ 3

चित्तभ्रमः—

सन्दिग्धमध्या स्वमुखं सुरायां
दृष्ट्वाऽन्यनारीति विभाव्य काचित् ।
"उच्छिष्टमद्यं पिबसीह कस्मात्
पिबेऽन्यदस्तीति" जहास तत्र ॥ 4

चन्द्राय अभयप्रदानम्—

सुरास्थचन्द्रप्रतिबिम्बदृष्टया
काचित्प्रमत्ता, "ननु चन्द्र! राहोः ।
भीत्या निलीनोऽत्र भवान् भयं ते
माभूत्" इतीत्थं तमुपादिशत् सा ॥ 5

ान्द्रिकायां मदिरात्वभ्रमः—

प्रसूनगेहस्थितरन्ध्रमार्गात्
ज्योत्स्नां पतन्तीं भुवने स्म काचित् ।
गृह्णाति पात्रे, मदिरेति मत्वा
नारीस्वभावादुत चित्तमोहात् ॥ 6

मद्यपानवैचित्र्यम्—

स्वपाणिकम्पात् मधु यच्च तल्पे
पपात तत् पानमदेन काचित् ।
विस्मृत्य, "तिष्ठन्मधु" चेति मत्वा
सा रिक्तपात्रं कुरुते निजोष्ठे ॥ 7

कपटनिद्रा—

एका ययौ रन्तुमनाः प्रसून-
तल्पं, न तद् ज्ञातमभूत् प्रियस्य ।
आलस्यमोक्षच्छलतो लुठन्ती
"घण्टा किमासीत्" इति सा जगाद ॥ 8

दूतसन्देहः—

सशूलपाणेर्नृपतेः समीपं
केकासमा काचिदगात् जवेन ।
कामेन रात्र्या सुरया नु केन
दूतेन नीतेयमिदं न जाने ॥ 9

**प्रियापादताडनम्—**

काचित्पदा भर्तुरुरो जघान
केल्यां, कराभ्यां स जुगोप वक्षः ।
"प्राणप्रियां चित्तगतां रिरक्षुः
रुणत्सि किं वे"ति जगाद साऽपि ॥ 10

**स्वप्नाभिनयः—**

असत्यनिद्रावशमेत्य काचित्
स्वप्नच्छलात् सा पतिमालिलिङ्ग ।
यथा तुषारं शमयेद्विवस्वान्
कामो वियोगं शमयेत्तथैव ॥ 11

**चन्द्रसूर्यौ—**

कृताल्पपुण्यैरिव लब्धभाग्यं
तदा शशी प्राप लयं क्षणेन ।
तद्विष्णुवक्षःस्थितकौस्तुभेन
समः पयोधौ रविराविरासीत् ॥ 12

## 18

## प्रत्युद्गमपटलः

(எதிர்கொள் படலம்)

**दशरथस्य गङ्गातीरप्राप्तिः—**

गजाह्वयशैलोत्थितदानवारि-
सम्पूर्णनद्यः प्रवहन्ति यस्मिन् ।
सैन्याब्धिना तेन युतो जगाम
गङ्गातटं राघवसिंह एषः ॥ 1

…नकेन प्रत्युद्गमः—

श्रुत्वा नृपस्याऽऽगमनं प्रहृष्टः
रथाश्वमातङ्गमयाब्धिजुष्टः ।
प्रत्युद्गमार्थं जनकः प्रयास्यन्
ययौ यथा सूर्यमुपैति चन्द्रः ॥ 2

…नारेणुः—

त्रिविक्रमः सप्त यथोर्ध्वलोकान्
भित्वा पुरा मातुमगात् प्रपञ्चम् ।
सैन्योत्थितो रेणुरिमं च मार्गं
प्रविश्य गत्वा प्रसृतो जगत्याम् ॥ 3

सेनयोरुभयोर्मेलनम्—

यदा त्वयोध्यापतिसैन्यराशि-
माविश्य युक्ता जनकस्य सेना ।
तदा पयोधिं प्रविशन्नदीनां
शब्देन तुल्यो ध्वनिराविरासीत् ॥ 4

चक्रवर्तिनोरन्योन्यालिङ्गनम्—

ततोऽवतीर्य स्वरथात्तदग्रे
स्थितः, "त्वमारोह रथं ममे"ति ।
उक्तो महीशेन तमारुरोह
स मैथिलस्तं नृप आलिलिङ्ग ॥ 5

**दशरथेन कुशलप्रश्नः—**

व्याघ्रेण सम्मानितसिंहतुल्यो
वैदेहमाश्लिष्य सबन्धुमित्रम् ।
क्रमेण पृष्ट्वा कुशलं, "त्वमग्रे
याही"त्यवोचत्, नृपतिर्ययौ च ॥ 6

**मिथिलातो रामप्रस्थानम्—**

सुरैर्नरैर्नागवरैश्च वन्द्यो
रामोऽश्वयोधैः सहितो नगर्याः ।
प्रस्थाय, नानामणिबद्धहेम-
रथेन यातः सह लक्ष्मणेन ॥ 7

**मृतस्य पुनरुज्जीवनम्—**

नीलोत्पलाभः सुरवन्द्यपादः
चित्रातिशाय्युत्तमरूपयुक्तः ।
रामो नृपं प्राप यथैव याताः
प्राणाः पुनः प्राप्य विशन्ति देहम् ॥ 8

**रामेण मातृवन्दनम्—**

कपर्दिपाणिस्थितचापभेत्ता
रामः स्वमातॄः क्रमशः प्रणम्य ।
उत्थाय तस्थौ तमवेक्ष्य तासां
हर्षं तदा को गदितुं समर्थः ! ॥ 9

।।य पितुरादेशः—

"एतैरनीकैः सहितस्त्वमग्रे
याहीे" त्ययोध्यापतिराह रामम् ।
समस्तजन्तोरपि मातृकल्पः
शास्ता जनानां भुवि साक्षिभूतः ॥ 10

।मस्य मिथिलागमनम्—

रथाधिरूढैरनुजैः प्रहृष्टैः
पार्श्वद्वये तैर्विनतैः समेतः ।
सुशङ्खभेरीध्वनिभिः स रामः
ययौ समुत्थाय रथाधिरूढः ॥ 11

तस्य नगरवीथीप्रवेशः—

नारीषु गेहाद्बहिरेत्य तत्र
स्थितासु तद्वीक्षणपुष्पवृष्ट्या ।
सिक्तः स रामः स्वपदेन गच्छन्
अवाप वीथीं मिथिलानगर्याः ॥ 12

पुराङ्गनानां चित्तस्थितिः—

आद्ये हरावन्तिकमागते तु
बाला युवत्यः सकलाश्च वीथ्याम् ।
अनङ्गबाणप्रहिताः समेत्य
प्रापुर्दशां यामथ तां वदामः ॥ 13

# १७

## पुरविहारपटलः

(உலாவியற் படலம்)

स्त्रीणां रामान्तिकागमनम्—

मयूरसारङ्ग समानगत्यः
    नक्षत्रविद्युत्समकान्तिमत्यः ।
भूषारवैर्भृङ्गरवैरुपेताः
    नार्यो जवात् रामसमीपमापुः ॥ 1

तासां स्थितिः—

"दृष्टं प्रियं मूर्तिमदेव तस्मात्
    जन्माभवत् सार्थकमि"त्युदीर्य ।
यथा जलं वीक्ष्य विवर्षदेशे
    मृगास्तु धावन्ति तथा स्त्रियोऽपि ॥ 2

जवेन रामं गतमात्मचित्तं
    गृहीतुकामाः प्रययू रमण्यः ।
ताः खिन्नमध्याः प्रचलत्प्रसूनाः
    निम्नप्रदेशप्रवहत्पयोवत् ॥ 3

कार्ष्ण्यकारणम्—

श्रीरामदेहस्थितकार्ष्ण्ययोगात्
    नेत्राणि कृष्णान्यभवन् किमासाम् ।
स्त्रीरत्ननेत्रैः किमु वीक्षितोऽसौ
    रामोऽभवन्नीलतनुर्न जाने ॥ 4

तोपालम्भः—

कामप्रयुक्तानिह पुष्पबाणान्
समीक्ष्य काचित् सुमुखी बभाषे ।
"रामस्य वीर्यं पितुरस्य चाज्ञां
धिक्कृत्य कोऽसावबलानिहन्ता !" ॥ 5

मोहितानां स्त्रीणां वचनानि—

वोढुं ह्यशक्ता निजदेहभारं
वस्त्रैकभूषोज्झितसर्वभूषा ।
अवाच्यसर्वोत्तमकामसौख्य-
रूपेण काचित् प्रतिमेव तस्थौ ॥ 6

का—

मन्नेत्रमार्गात् कपटी स रामो
विवेश चित्तं नयने पिधाय ।
अन्तः स बद्धः सखि ! तेन रन्तुं
गच्छेम शय्यामिति काचिदाह ॥ 7

अपरा—

विस्रस्तभूषावसना हि काचित्
कामाभिघातं त्वविचार्य गात्रे ।
पश्यन्ति या राममिहादरेण
कोपादिदं पश्यति तास्तु सर्वाः ॥ 8

रामस्य सर्वाङ्गसौन्दर्यम्—

या: स्कन्धमैक्षन्त न ताभिरन्यत्
दृष्टं करौ पादतलौ च तद्वत् ।
सर्वाङ्गशोभां न हि काऽप्यपश्यत्
एको यथा सर्वमतस्थमीशम् ॥ 9

परब्रह्मणो नारीहृदयवासः—

एकां सुकेशीं तनुमध्यमां तां
पातुं स रामो हृदयं विवेश ।
जगत् समस्तं जठरे कदाचित्
धृताच्च रामाद् भुवि कोऽस्ति वन्द्यः ? ॥ 10

राजमार्गे रामं दृष्ट्वा नारीवचनानि—

स्त्रियाः कृते पावनराम! धीर!
रौद्रं धनुः पूर्वमभञ्जयस्त्वम् ।
कामेक्षुचापं त्वमिहाद्य भङ्क्त्वा
गृहाण मामित्यथ काचिदाह ॥ 11

दिव्यमङ्गलविग्रहदर्शनम्—

एका सुतप्ता श्लथिता रुदन्ती
सुदीर्घमुच्छ्वस्य सखीमवेक्ष्य ।
सम्योज्य हस्तौ, "सखि! रामबिम्बं
कामो लिखेत् किन्न्वि"ति पर्यपृच्छत् ॥ 12

तत्त्वनिर्णयः—

एतादृशान्युत्तमलक्षणानि
नरेषु न स्युः सुविमृश्यमाने ।
अतः स विष्णुर्भवतां वदामि
ज्ञायेत पश्चादिति काचिदूचे ॥ 13

रहस्यार्थगोपनम्—

वर्षामयूरीसदृशी यदेका
स्वकीयकामं हृदि गोप्तुमैच्छत् ।
कामस्य तद् ज्ञातमभूद्रहस्यं
मुखं मनोवन्न हि गोपनार्हम् ॥ 14

परस्त्रीपराङ्मुखता—

"ताः स्विन्नगात्रा व्यथिताः सशोकाः
स्त्रियः स्वदृग्भ्यां न ददर्श शुद्धः ।
सस्मार नायं मनसाऽप्यतोऽसौ
किं स्नेहशून्यस्त्वि"ति काचिदाह ॥ 15

रामनिन्दापरा काचित्—

मुग्धासु नारीषु किमप्यलब्ध्वा
गच्छन् स रामः करुणाविहीनः ।
ज्ञानी न चायं वृणुते हि सीतां
स घातकः स्यादिति काचिदूचे ॥ 16

निर्लज्जा काचित्—

एका परां प्रेक्ष्य तु कामभोहात्
"किं राममूर्तेर्निकटे मनो मे ।
दृष्टं त्वया ब्रूहि तदि"त्यपृच्छत्
आशायुतानां न भवेद्धि लज्जा ॥ 17

प्राणं प्रार्थयाना अपरा—

"स्वप्राणदानेन परानरक्षन्
तद्वंशजाताः परमेष रामः ।
प्राणान् मदीयान्न हि नः प्रयच्छेत्
क्रौर्यं कुतोऽस्ये"ति जगाद काचित् ॥ 18

रामस्य सभामण्डपप्रवेशः—

वधूभिरित्थं कथितः समन्तात्
भेजे नृपेन्द्रैः सहितः स रामः ।
वेदान्तवेत्रा कुशिकात्मजेन
तथा वसिष्ठेन युतां सभां ताम् ॥ 19

तस्य आसने उपवेशः—

साकेतजन्मा भुवि धर्मवृद्ध्यै
नत्वा मुनी, प्राप्य तयोरनुज्ञाम् ।
छायासमैर्भ्रातृभिरेष युतो
वरासनं प्राप्य रराज रामः ॥ 20

रथस्य मण्डपागमनम्—

साकेतराजो निजबन्धुमित्रैः
समेत्य यातो मणिमण्डपं तम् ।
नक्षत्रबृन्दैरनुगम्यमानः
प्राप्नोति चन्द्रो गगनं यथैव ॥ 21

नकस्य आतिथ्यम् —

वित्तं समस्तं जनकः प्रमोदात्
दत्वोपचारं कृतवान् यदत्र ।
जनेषु रामे च समानभावात्
चक्रे तदाऽसौ, किमितोऽन्यदस्ति ॥ 22

## 20

## सीतालङ्करणपटलः

(கோலங்காண் படலம்)

सीतामानेतुं वसिष्ठादेशः—

सजीवचित्रप्रतिमाङ्गनाभिः
रघूद्वहे शक्रवदेधमाने ।
दृष्ट्वा वसिष्ठो जनकं बभाषे
"सीतां मृगाक्षीं त्वमिहानये"ति ॥ 1

चेटीकृतसीतालङ्कारप्रकारः—

अक्ष्णोर्यथा पक्ष्म, तदीयरूप-
प्रच्छादकान्याभरणानि चेति ।
विस्मृत्य सख्यो निजसुन्दरीं तां
अमण्डयन् शर्करया सुधां वा ॥ 2

कण्ठभूषणम् —

कण्ठे तु तस्याः हरिशङ्खतुल्ये
सख्यो बबन्धुर्वरभूषणानि ।
सर्वाङ्गनामङ्गलकण्ठभूषा
सीताऽस्ति, कण्ठाभरणं कुतोऽस्याः ॥ 3

तिलकालङ्कारः—

त्रिलोकनारीतिलकायितायाः
तस्या मुखे तास्तिलकं च चक्रुः ।
नीलोत्पलैरावृतपद्मजन्य-
चन्द्रोत्थनक्षत्रसमं तदासीत् ॥ 4

सीतादर्शनेन स्त्रीणामपि मोहः—

सीताङ्गशोभां प्रसमीक्ष्य सख्यः
पद्मान्मधुप्राप्य यथैव भृङ्गाः ।
बभूवुरस्पष्टवचोविमुग्धाः
पुंसां वधूनां हि मनः समानम् ॥ 5

तां पूर्णिमाचन्द्रसमां निरीक्ष्य
स्त्रियोऽपि हर्षादभवन् विमुग्धाः ।
एकैकमङ्गं रमणीषु रम्यं
कः प्रेक्ष्य लावण्यनिधिं सहेत ? ॥ 6

सीतासौन्दर्यम् —

सुशङ्खहस्ता जलजासनस्था
समस्तजन्तोर्हृदये वसन्ती ।
अरुन्धतीतुल्यपतिव्रता सा
समा हि रामेण किमत्र वाच्यम् ॥ 7

तस्याः प्रस्थानम्—

नता सखीभिर्मणिभृद्वितान-
च्छायातले दीपसमा ज्वलन्ती ।
तारागणे बालशशी यथैव
सीता सभां गन्तुमथ प्रतस्थे ॥ 8

तदीयगमनप्रकारः—

यान्त्याः स्वपुत्र्या मृदुपादखेदं
मत्वेव भूः पल्लवपुष्पराशिम् ।
आस्तीर्य सर्वत्र गतेवमूढा
सीता ययौ भूषणशिञ्जितेन ॥ 9

तस्याः मणिमण्डपप्राप्तिः—

हेमप्रभा चन्दनशीतलाङ्गी
सुपुष्पगन्धा तडिता समाना ।
देवाङ्गनाहंससुधा विजित्य
प्राप्नृपाढ्यं मणिमण्डपं सा ॥ 10

सीतायाः दिव्यमङ्गलविग्रहः—

सीताशरीरं श्रुतिवच्च नित्यं
नराश्च वध्वः प्रसमीक्ष्य मुग्धाः ।
तथैव तस्थुः प्रतिमासमानाः
निश्चेष्टिता निश्चलनेत्रयुक्ताः ॥ 11

रामेण सीतादर्शनम्—

कन्यासुधां वीक्ष्य पयोदवर्णः
"सा जानकी वा न हि वे"ति मुग्धः ।
निश्चित्य पश्चान्मुमुदे स रामः
सिन्धोः सुधां प्राप्य यथा सुरेन्द्रः ॥ 12

वसिष्ठप्रहर्षः—

अस्मत्तपोभिर्जनितः स रामः
सशङ्खचक्रो हरिरेव यस्मात् ।
तस्मादियं स्यात् कमलोत्थितश्री-
रितीव मत्वा मुमुदे वसिष्ठः ॥ 13

रथानन्दः—

समस्तलोकाधिपतिः स राजा
सीताङ्गशोभां प्रसमीक्ष्य मेने ।
"सप्तापि लोका हि मयाऽत्र भुक्ताः
परन्तु लक्ष्मीमलभे त्विदानीम् ॥ 14

तुरन्तिके सीतोपवेशः—

विहाय पद्मं नृपसद्मजाता
त्वादौ वसिष्ठं रघुपुङ्गवं च ।
प्रणम्य हर्षाश्रुसमेततात-
पार्श्वे वरिष्ठासनमाविशत् सा ॥ 15

परमानन्दभरितो विश्वामित्रः—

एषा विषाक्षी कमलासनेति
नीलाद्रिरामो यदि वेत्ति पूर्वम् ।
चापोऽस्तु भिन्द्यादपि सप्तशैलान्
इतीव मेने कुशिकात्मजोऽसौ ॥ 16

सीतायाः सन्देहनिवृत्तिः—

रामेण चापग्रहणं च भङ्गं
श्रुत्वा जनेभ्यो गतसंशया सा ।
चित्तस्थितं तं वलयस्थनेत्रा
ददर्श सीता पुरतोऽप्यपाङ्गैः ॥ 17

हृदिस्थचोरेण धनुस्तु भग्न-
मासीदिति प्रेक्ष्य तुतोष सीता ।
बन्धाद्विमुक्तो हृदये रमेशं
दृष्ट्वा यथा मोक्षमुपैति विद्वान् ॥ 18

दशरथेन विश्वामित्रं प्रति मुहूर्तदिनप्रश्नः—

विज्ञानपारङ्गतकौशिकं तं
दृष्ट्वा प्रसिद्धो रघुवंशभूपः ।
"श्रेष्ठं दिनं किं तनुमध्यसीता-
विवाहयोग्यं वद चे"त्यपृच्छत् ॥ 19

मुहूर्तदिननिर्णयः—

उत्प्लुत्य केदारतलेषु मत्स्याः
निघ्नन्ति वृक्षान् महिषांश्च यत्र ।
तत्कोसलाधीश! "विवाहयोग्यं
दिनं श्व एवे"ति मुनिर्जगाद ॥ 20

दशरथेन स्ववेश्मगमनम्—

नतेषु भूपेषु रघुप्रवीरो
रत्नाढ्यसावर्तसुशङ्खघोषैः ।
बालार्कतुल्याभकिरीटयुक्तः
विप्रैर्नियुक्तः प्रययौ स्ववेश्म ॥ 21

स्तमयः—

हंसीव कृच्छ्रेण जगाम सीता
रामोऽप्यगच्छन्निजहेमसद्म ।
महर्षयो भूपगणाश्च जग्मुः
सूर्योऽपि मेरावभवन्निलीनः ॥ 22

## 21

## सीताविवाहपटलः

(கடிமணப்படலம்)

ानक्याः स्थितिः—

यत्नेन लब्ध्वाऽपि तटाकतीरं
पातुं जलं यद्वदलब्धभाग्याः ।
पिपासवः खेदमवाप्नुवन्ति
तां वै दशां प्राप पिकस्वना सा ॥ 1

वेरहिण्यास्तस्याः शोकवचनानि—

तद्दुर्बलप्राणहरैकदीक्षाः
किं वञ्चकाः सन्ति निशे! कठोरे! ।
सूर्योदये मे पतिरेष रामः
मां प्राप्नुयात् त्वं च कुरु प्रभातम् ॥ 2

मलयमारुतम्—

वाताख्यशार्दूल! सुगन्ध! शीत!
गुहानिवासिन्! मलयाचलस्य ।
ज्योत्स्नाख्यदन्तैर्युत! वह्निरूप!
मत्प्राणमन्विष्यसि किन्नु हन्तुम्! ॥ 3

**वीथ्यां कन्यासु अत्याचारः—**

रथ्याचरो नीलघनाभवीरः
रात्रिन्दिवं मुञ्चति नैव मां सः ।
अनूढकन्यानिकटं प्रयान्तः
कुलीनभूपाः किमु सन्ति लोके ॥ 4

**रात्रिनिन्दा—**

गीतं न शान्तं न दिवाभ्युपैति
चिन्ता न याता न निशावसानम् ।
चित्तेऽस्ति रोगो न च याति शोकः
निद्रापि नायात्यहहो किमेतत् ! ॥ 5

**समुद्रनिन्दा—**

सिन्धो ! समुत्थाय पतंस्तरङ्गैः
श्रान्तस्वदेहो वलयैर्विहीनः ।
नाप्नोषि निद्रां सततं च तस्मात्
कन्यासि किं त्वं मदनाद्बिभेषि ? ॥ 6

**कविवचनम्—**

इत्थं बहूक्त्वा व्यसनेन सीता
यदा सुतप्ता क्षपिता बभूव ।
तस्यां निशायामनघः स रामः
स्मृत्वा यदूचे तदिदं वदामः ॥ 7

ःतेन रामेण बहुधा चिन्तनम्—

चित्ते पुरा नेत्रशलाकया तां
कामातुरोऽहं व्यलिखं पुनस्ताम् ।
दृष्ट्वाऽथ पूर्णां नहि वेद्मि-शोभां
दृश्येन किञ्चित्तडितां पुरस्तात् ॥ 8

न्द्रदूषणम्—

हे चन्द्र! सीतामुखतुल्यरूप!
कामाख्यबीजस्य च दोहद! त्वम् ।
न तेऽनुरूपं किल कृत्यमेतत्
एकाकिनं मां न करोषि मित्रम् ॥ 9

वेषाक्षिणी—

अग्निं वमत्पन्नगदन्तपङ्क्त्यां
क्रूरं विषं स्यादिति तन्न सत्यम् ।
मन्नेत्रचित्ते सततं वसन्त्याः
तस्यास्तु दृष्ट्यां विषमस्ति सत्यम् ॥ 10

देवाधिदेवे बहुरूपचिन्ते
"सीताविवाहो भविता स एव ।
पुरीमलङ्कृत्य निवेद्यतां तद्
भेरीरवै" रित्यवदन्महीशः ॥ 11

सूर्योदयः—

"रामोऽञ्जनाभो जलजोत्थसीता
मिथो मिलेतां परिणीय तौ श्वः" ।
इतीदमाकर्ण्य रविः स्ववंश्य-
रामोत्सवं द्रष्टुमिहोदितः किम् ॥ 12

पत्तनालङ्कारप्रकाराः—

नराः स्वगेहान्यथ तोरणानि
सम्पूर्णकुम्भान् वसनैश्च रत्नैः ।
आच्छाद्य सम्यक् बहु भूषयन्ति
कुर्वन्ति भोज्यं द्विजभोजनाय ॥ 13

जना नगर्या गृहपूर्वभागे
तारागणैर्व्योमगतैः समानान् ।
निर्मान्ति मुक्तामयमण्डपांस्ते
तच्छायया घर्मनिवारणार्थम् ॥ 14

स्त्रीणामलङ्कारः—

काश्चित्सुगन्धं वसनानि काश्चि-
दन्याः प्रसूनं तिलकं मुखेषु ।
धृत्वा च रम्योष्ठतलेषु वर्णं
कृत्वा, विभान्त्यत्र विभूषिताङ्ग्यः ॥ 15

लोकत्वभ्रान्तिः—

तद्रत्नकान्तिप्रतिबिम्बहेतोः
पुरःस्थितं द्रष्टुमपारयन्तः
किं देवलोकस्त्वयमेव वा कि-
मन्यो भवेद्वेति सुरा विमुग्धाः ॥ 16

शरथेन विवाहमण्डपाऽऽगमनम् —

आद्यन्तहीनं मणिमण्डपं तं
शैलोन्नतं हेमविभूषितान्तम् ।
सीताविवाहोचितवस्तुजुष्टं
साकेतराजः प्रविवेश तुष्टः ॥ 17

मणिमण्डपः—

महर्षिवृन्दैरमरैर्महीशैः
अन्यैः समृद्धो मणिमण्डपोऽसौ ।
जगत्समस्तं ग्रसतोऽस्य विष्णोः
नीलोदरेण स्वयमाप साम्यम् ॥ 18

रामेण ऊर्ध्वपुण्ड्रधारणम् —

आब्रह्मकीटं भुवि सर्वजन्तोः
विनाश्य मोहं परमं पदं तु ।
तेषां प्रदातुं क्षममूर्ध्वपुण्ड्रं
स्नात्वा स रामो धृतवान् स्वकीयम् ॥ 19

**कर्णकुण्डले—**

रात्रिन्दिवं चन्द्ररवी तु सीता-
स्थितिं निरीक्ष्य स्वयमेत्य रामम् ।
तत्कर्णमूले वदतः किमेता-
वित्येवमास्तां धृतकुण्डले द्वे ॥ 20

**उत्तरीयम्—**

महात्मनां ज्ञानसमं यथेच्छ-
सञ्चारयोग्यं धवलोत्तरीयम् ।
दयाप्रवाहैः सदृशं च राम-
कण्ठेऽभवन्मौक्तिकहारतुल्यम् ॥ 21

**यज्ञोपवीतम्—**

महर्षिदेवादिभिरप्रमेय-
त्रिमूर्तिरूपोऽहमिदं भवद्भिः ।
ज्ञातव्यमित्थं वदतीव रामः
त्रिभिः स्ववक्षःस्थितयज्ञसूत्रैः ॥ 22

**रामवेषपरिग्रहः—**

नागेशयानः सुरकार्यहेतोः
उत्थाय विष्णुर्धृतरामवेषः ।
समान् रिरक्षुः स्वयमात्मदेह-
मलञ्चकार स्वशरीरतुल्यम् ॥ 23

रोहणम्—

गवां सहस्रं मणिहेमभूमीः
सद्भ्यो यथेष्टं च वितीर्य रामः ।
वेदैकवित्तैरथ विप्रवर्यैः
संस्तूयमानो रथमारुरोह ॥ 24

तृभिरुपचारः—

सानन्दबाष्पो रथसारथिः सन्
यथाऽरुणोऽसौ भरतः सदण्डः ।
तस्थौ रथाग्रे व्यजने तथाऽन्या-
वगृह्णतां याति रथेन रामः ॥ 25

ामस्य विवाहमण्डपप्राप्तिः—

साकेतराजो गजतुल्यभूपैः
समेत्य यं मण्डपमाप्य तस्थौ ।
रामोऽपि धन्वी सरथस्तमाप
रक्तो रविर्मेरुमुपैति यद्वत् ॥ 26

सीतायास्तत्रागमनम्—

समीनचन्द्रं स्वयमादधाना
प्राच्यां रथे जातवतीव सीता ।
पूर्वं पयोधौ भुवि चाद्य पश्चात्
जातेव शैलादगमत् सभां ताम् ॥ 27

7

## विप्रैः सह वसिष्ठागमनम्—

वेदान्तविद्भिर्धृतयज्ञसूत्रैः
युतो विवाहं विधिवद्विधातुम् ।
शास्त्रोक्तसंभारगणान् गृहीत्वा
समाययौ मोदयुतो वसिष्ठः ॥ 28

## योगभोगौ—

हंसीव सीता जयवीररामो
विवाहपीठे सहितौ निषण्णौ ।
किं योगभोगौ सहितौ पृथिव्या-
मित्येवमूह्यौ किल तावभूताम् ॥ 29

## कन्यादानम्—

स मैथिलो राममुखं निरीक्ष्य
"सुतां मदीयां रमयेव विष्णुः ।
लब्ध्वा चिरायुर्भव चे"त्युदीर्य
श्रीरामहस्तं सलिलैरसिञ्चत् ॥ 30

## शिलारोहणारुन्धतीदर्शने—

तौ दम्पती कङ्कणसूत्रहस्तौ
प्रदक्षिणं चक्रतुरग्निवेदिम् ।
स्पृष्ट्वा शिलां पादतलेन सीता-
ऽप्यरुन्धतीमग्रतके ददर्श ॥ 31

वेशः—

तथाऽन्यकर्माणि विधाय रामः
तपोधनान् हर्षयुतान् प्रणम्य ।
नत्वाऽप्ययोध्यापतिपादयुग्मं
सीतां करे प्राप्य गृहं विवेश ॥ 32

ृवन्दनम्—

कुर्वन् प्रियं मातुरपेक्षयाऽसौ
आदौ तदा केकयराजपुत्रीम् ।
नत्वा, ततः कोसलराजपुत्रीं
पूतां सुमित्रां च ननाम रामः ॥ 33

त्तराफल्गुनी—

रम्योत्तरे फाल्गुननाम्नि मासि
सहस्रनामा रघुवीरसिंहः ।
जग्राह सीतां भगवान् वसिष्ठो
वेदोक्तमार्गेण जुहाव वह्निम् ॥ 34

लक्ष्मणादीनां परिणयनिर्णयः—

"लक्ष्मीसमा भ्रातृसुताश्च तिस्रः
रामानुजानां च कृते प्रधानाः ।
गृहाण राजन्नि"ति मैथिलोऽसौ
सम्भाष्य राज्ञा सह निश्चिकाय ॥ 35

दशरथस्य मिथिलायां कतिपयदिनवासः—

दत्वा यथेष्टं रघुवंशभूपः
बहुश्रुतैर्योगिवरैः समेत्य ।
उवास हृष्टो मिथिलानगर्यां
बहूनि यातानि दिनानि तस्य ॥

## 22

## परशुरामपटलः

(பரசுராமப் படலம்

विश्वामित्रस्य हिमालयगमनम्—

अनेकभोगाननुभूतवन्तौ
तौ दम्पती गाधिसुतस्तदानीम् ।
वेदोक्तरीत्या त्वनुगृह्य हार्दं
दिश्युत्तरस्यां प्रययौ हिमाद्रिम् ॥

दशरथस्य अयोध्यां प्रति प्रस्थानम्—

रघूद्वहो गन्तुमनास्त्वयोध्यां
"प्रस्थीयतां सैन्य"मितीरयित्वा ।
ततो महीशैर्गजतुल्यवीरैः
सर्वोत्तमं स्वं रथमारुरोह ॥

मार्गे दुर्निमित्तानि—

मार्गे मयूराः किल दक्षिणेन
काकादयो वाममुखाश्च जग्मुः ।
तद्वीक्ष्य "विघ्नो भविते"ति मत्वा
स्तब्धो नृपो नैव ययौ रथेन ॥

प्रश्नः—

देवज्ञमाहूय नृपोऽब्रवीत्तं
"किं वा सुखं स्यादुत दुःखमस्मात्"
"विघ्नो भवेदद्य ततो विनश्येत्"
इत्याह भूपं द्विजशास्त्रवेदी ॥ 4

रामाऽऽगमनम्—

जटाप्रभाभिस्तमसां निहन्ता
कुठारहस्तो ज्वलिताग्निनेत्रः ।
चलन्महामेरुसमानरूपः
क्रूराशनेस्तुल्यविसवयुक्तः ॥ 5

स्तब्धं समस्तं जगदेव तेन
दिशागजाश्च श्लथिताः, सुराद्याः ।
भीताः, समुद्राः कथिता बभूवु-
रानम्य चापं शरमाददे सः ॥ 6

नतांश्च शैलान् जलधीन् प्रवृद्धान्
कुर्वन् कुठारायुधजामदग्न्यः ।
प्राप्तस्तदा, रामपिता निरीक्ष्य
"प्राप्तः कुतोऽसा" विति मन्यते स्म ॥ 7

रामं दृष्ट्वा परशुरामवचनम्—

जाने भवद्भग्नधनुःप्रभावं
जिष्णुरेवं भुजयोर्बलं तत् ।

